॥ श्रीविष्णु पञ्चायुधस्तोत्रम् ॥

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम् ।
सुरद्विषां प्राणविनाशविष्णोश्चक्रं सदाऽहं शरणं प्रपद्ये । १
विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहन्ता ।
तं पाञ्चजन्यं शशिकोटिशुभ्रं शङ्खं सदाऽहं शरणं प्रपद्ये । २
हिरण्मयीं मेरुसमानसारं कौमोदकीं दैत्यकुलैकहन्त्रीं ।
वैकुण्ठनामाग्रकराभिमृष्टां गदां सदाऽहं शरणं प्रपद्ये । ३
रक्षोऽसुराणां कठिनोग्रकण्ठ च्छेदक्षरच्छोणितदिग्धधाराम् ।
तं नन्दकं नाम हरेः प्रदीप्तं खड्गं सदाऽहं शरणं प्रपद्ये । ४
यज्ज्यानिनादश्श्रवणा त्सुराणां चेतांसि निर्मुक्तभयानि सद्यः ।
भवन्ति दैत्याशनिबाणवल्लिः शार्ङ्ग सदाऽहं शरणं प्रपद्ये । ५
इमं हरें पञ्चमहायुधानां स्तवं पठेद्योऽनुदिनं प्रभाते । var पठेद्योसुदिनं
समस्तदुःखानि भयानि तस्य पापानि नश्यन्ति सुखानि सन्ति । ६
वनेरणे शत्रुजलाग्निमध्ये यदृच्छयापत्सु महाभयेषु ।
इमं पठन् स्तोत्र मनाकुलात्मा सुखी भवेत् तत्कृतसर्वरक्षः । ७
सचक्रशङ्खं गदाखड्गशार्थौलणणं
पीताम्बरं कौस्तुभवत्सलाञ्छितम् ।
श्रिया समेतोज्ज्वल शोभिताङ्गं
विष्णुं सदाऽहं शरणं प्रपद्ये ।
जलेरक्षतु वाराहः स्थलेरक्षतु वामनः ।
अटव्यां नारसिंहश्च सर्वतः पातु केशवः ।
इति श्री विष्णु पञ्चायुध स्तोत्रम् ।